तेजोभिर्जगदुत्तरैः परिभवं कुर्वन्निवाहर्पतेः
श्वेतेनातपवारणेन किरणानिन्दोश्च निन्दन्निव ।
उच्चैःकाञ्चनकेतनाग्रनिहितस्तम्बेरमत्लम्भित-
.स्वर्मातङ्गमदो न दोःपरिमलं कस्याप्यसौ मृष्यति ॥ २४ ॥

अर्जुनः—किमुच्यते मानधनानामेको (धुरीणः) खल्वसौ धृतराष्ट्रनन्दनः ।

उत्तरः—(सुदूरमवलोकयन्) अयं च कः सकलसैनिकाग्रगामी नरशृभः सरभसं पश्चादवलोकमानः प्रतिष्ठते ? ।

अर्जुनः—(सम्यग् निरूप्य) कुमार ! सोऽयं कालपृष्ठधन्वा दुर्योधनस्य प्रियमित्रं सूतसूनुः तवापि कर्णे इति भुजचण्डिमडिण्डिमेन कर्णपथमवतीर्णो भविष्यति । पश्य !

(४) कर्णः
अयमघृतिनिदानं दानधर्मस्य भूर्म
द्विपजगजवरत्राचिह्नितेन ध्वजेन ।
शतमपि नृपतीनामप्रहृत्य प्रवीरो
विरमति न कथञ्चित्सङ्गरादङ्गराजः ॥ २५ ॥

उत्तरः—(पुरः पश्यन्) कोऽयमनीकान्तरिक्षमध्यमध्यासीनो दिनाधिनाथवद्दवगाहमीहते तेजस्तरङ्गसङ्गमावदातः शातकुम्भकुम्भाङ्कितकेतनो मनोवेगैर्वाजिभिरुह्यमानरथो महारथपङ्क्तिपावन इव विभाव्यते ।

अर्जुनः—(दृष्ट्वा) कुमार! येन प्रसभं संरम्भवता भारद्वाजकुलकुलापविहङ्गमपुङ्गवेन सम्परायपराभूताद्रुपदमहीन्द्रात्तादृशं यशःपीयूषमाकृष्यते स्म ।

उत्तरः—नामतः श्रोतुमिच्छामि ।

अर्जुनः—(सबहुमानम्)

आलब्धप्रतिभूमिपालपशुषु स्पष्टं विधत्ते धनु-
ष्टङ्कारेण निमन्त्रणं पितृपतेः सङ्ग्रामसत्रेषु यः ।

---

१ B दूरमवलोक्य २ कर्ण इति ३ A चरित्रा० ४ B ततादृश

(५) द्रोण

केषामेष निमेषतोऽपि न घनस्थामाभिमानद्रुमं
द्रोणः शोणतुरङ्गसङ्गतरथारूढोऽधिरोढुं क्षमः ॥ २६ ॥

उत्तरः—यस्य किल पार्थः प्रकुप्यति[1] शिष्यसहस्रैरपि अधीयमानाया-मिष्वास्त्रवासनायाम् ।

अर्जुनः—( स्वगतम् ) नमो गुरुभ्यो यदनुग्रहेण शिष्यपरमाणोर्ममापि गणना तेषु धनुर्धरविद्यावन्धुरेषु[2] बन्धुषु ।

उत्तरः—( पुनरङ्गुल्या दर्शयन् ) कोऽयमितः सितमरीचिमण्डलधलक्षरो-चिषा मौलिनेवातपत्रेण विराजमानो मानैकनिकेतनं महारथः पुरो दृश्यते ? ।

अर्जुनः—( सरोमाञ्चम् ) वीरशब्दस्य प्रवृत्तिनिमित्तैश्चरिताद्भुतैरनुर-ञ्जितजयलक्ष्मीकः स एष पुराणपुरुषः ।

य: क्षत्राणां क्षतजसरिति स्नाति जाते स्म पित्रोः
शावाशौचे तमपि समिति व्यस्तवान् जामदग्न्यम् ।
तालेनोच्चैः कनकतनुना केतनाग्रस्थितेन
स्थामागारं स्फुरति पुरतः शन्तनोः पुत्र एषः ॥ २७ ॥

अपि च ।

शशधरशिरोमाल्यं कुल्या स्वयं यमजीजनत्
त्रिभुवनजयस्मेरो यस्य स्मरोऽपि पराङ्मुखः ।
नियतमयुतं वीराणां यस्तृणीकुरुते रणे
कुरुकुलगुरुः सोऽयं भीष्मः सम्पृध्यति सूष्मणा ॥ २८ ॥

तदिह विहरतां कुमारः पौरुषोचितम् । ( इति रथं प्रेरयति )

उत्तरः—( दृष्ट्वा सभयरोमाञ्चम् ) बृहन्नटे ! बृहन्नटे ! मन्दय स्यन्दनवेगम् । विमृशामि किञ्चित् ।

अर्जुनः—( सोल्लासम् ) परिज्ञातमिदं मया ते विमर्शस्थानम् ।

उत्तरः—कथय किमिव ? ।

अर्जुनः—इह हि वीरवृन्दारकाणां वृन्दे नेदीयसि,

---

१ A प्रकुप्यते २ B धनुर्धरधुरन्धरेषु

किं गाङ्गेयममेयबाहुविभवं द्रोणं किमुच्चद्गुणं
नाद्राक्षीः सितशात्रवं किमथवा राधेयमत्युद्धतम् ।
दुष्टं वा धृतराष्ट्रसूनुमधुना पूर्वं मृधाग्राह्वये
सर्वान्वा सममित्यमर्षिमनसो मन्ये विमर्शस्तव ॥ २९ ॥

उत्तरः—नैतदन्यदेव तत् ।

अर्जुनः—कथ्यतां तर्हि ।

उत्तरः—बहवः प्रतीतपराक्रमबाहवो महारथास्ते इतो वर्तन्ते । अहं पुनरेकाकी । तदपसरणमेव श्रेयः ।

अर्जुनः—( कर्णौ पिधाय ) शान्तं पापं शान्तं पापम् । किमिदमक्षत्रिय इव व्याहरसि । पश्य ! पश्य !

द्वारं विमुक्तेः प्रतिबन्धमुक्तं कीर्त्यङ्गनानर्तनरङ्गभूमिम् ।
फलं यियासोरिह जीवितस्य कः सङ्गरं प्राप्य पराङ्मुखः स्यात् ॥३०॥

उत्तरः—नात्यन्तमपसरणं किन्तु त्रिगर्तानुच्छिद्य निवृत्तेषु तातपादेषु गृहीतमहाभटसहायो भूयोऽभियातिपताकिनीमभियोक्ष्यामहे ।

अर्जुनः—( विहस्य ) अयि वीरव्रतानभिज्ञ !

सम्परायेषु शूराणां शोभामात्रमनीकिनी ।
दोर्दण्डं चापदण्डं वा सहायं ते हि वृण्वते ॥ ३१ ॥

( इति वाजिभ्यः प्रतोदमुद्यच्छति )

उत्तरः—( सत्रासम् ) बृहन्नट ! सत्यं विराटकुलतन्तुच्छित्तये प्रवृत्तमिव पश्यामि त्वाम् । ( धनुर्मुक्त्वा प्रसह्य सङ्गृह्णाति ) ।

अर्जुनः—आः किमेवं विक्लवोऽसि ?। विचारय स्थैर्यावस्थापितेन चेतसा।

उत्पत्तिर्जगतीतलैकतिलके गोत्रे धरित्रीभुजा-
मूर्जापात्रमिदं वयः किमपरं कार्योत्सवोऽयं गवाम् ।
दिष्ट्या सङ्घटितस्तवैष सुकृतैर्योगस्तदुद्योगवान्
उर्वीं निर्विश निर्जितामसुधनक्रीतां दिवं वार्जुना ॥ ३२ ॥

१ A °प्रचद्गुणान् २ B सत्रमपरा ३ B यातिपताकिनीमभियोदयेऽहम् । ४ B वार्जय

अपि च—दर्शयित्वा द्विषां पृष्ठमजातव्रणविग्रहः ।
दर्शयिष्यसि दाराणां वियातवदनं कथम् ॥ ३३ ॥

तन्मुञ्च रश्मीन् ।

उत्तरः—( तूष्णीको मूर्द्धानं धुनोति )

अर्जुनः—( स्वगतम् ) न तावदयं गौर्गुलिरिव वाक्प्रतोदैः कदर्थितोऽपि समरधुरामुद्वोढुमुत्सहते । तत्किं करोमि । ( साहङ्कारम् ) कृतमिदानीं कर्तव्यान्तरेण ।

वत्सानामहमुत्सवं विरचयाम्युच्चैर्मुहुः क्रन्दतां
निष्क्रीणामि विराटकुट्टिमसुखावस्थानमानीय गाः ।
द्रागेष द्रुपदात्मजानयनजैरम्भोभिरप्युद्भटः
क्रोधाग्निः कवलीकरोतु च कुरुक्रव्याणि हव्याशया ॥ ३४ ॥

( प्रकाशम् ) कुमार ! गृहाण प्रग्रहान् । उपनय मे चापं यथैतानवधूय धेनूरानयामि ।

उत्तरः—( सोल्लासम् ) वरमेतदप्यस्तु । ( इति तथा करोति )

अर्जुनः—( धनुरादाय विलोक्य च स्वगतम् ) न खल्वियं अस्मदाकर्षणं क्षमते कार्मुकवल्ली । तस्मात्तदेव देवज्येष्ठेन परमेष्ठिना चिरपरिशीलितं चापमनुध्याय समीहितं साधयामि ।

( प्रकाशम् ) कुमार ! वीक्षसे सेनागमनमार्गमुत्तरेण निरन्तरपलाशोपशोभितं शमीपादपम् । तदिह प्रापय रथं यथा किमपि कार्यान्तरमनुतिष्ठामि ।

उत्तरः—( तथा कुर्वन्सविस्मयमात्मगतम् ) अहो ! वर्षधरवेषधारी पारीन्द्रपराक्रमः कोऽप्येष पुरुषविशेषो यदेतं दुस्तरमरातिसैन्यसागरं भुजद्वयेन तरीतुमुत्सहते ! ( पुरोऽवलोक्य प्रकाशम् ) बृहन्नट ! सेयं शमी । तद्विधीयतामभिमतम् । ( इति रथं स्थापयति )

अर्जुनः—( रथं उपविश्य ध्यानं नाटयति )

उत्तरः—( ऊर्ध्वमवलोक्य साश्चर्यम् ) बृहन्नट ! पश्य ! पश्य !

किमिदमुदरे भाति व्योम्नः सुधामधुरं मह-
स्तदनु च दिनारम्भोज्जृम्भत्प्रभाकरसन्निभम् ।

अयमपि महानम्भोदानामिव श्रवणद्वय-
प्रणयमयते घोषः केषामशेषदिगन्तभाक् ॥ ३५ ॥

अर्जुनः—( नेत्रे समुन्मील्य ) कथमाजग्मिवानेवायमाञ्जनेयानुवर्त्तिनां भूतसङ्घातानां किलकिलारवैरापूरितरोदसीविवरः कार्तस्वरपुरस्कृतावयवो वल्क्षवाजिभिरुह्यमानः स्यन्दनराजः ।

( ततः प्रविशति आकाशमार्गेण रथारूढो दिव्यपुरुषः )

दिव्यपुरुषः—कुमार किरीटिन् ! स एष प्लवगराजचक्रवर्त्तिना सनाथीकृतकेतनाग्रः साङ्ग्रामिको रथः । तदेतद्देवताभिनन्दितप्रभावं भवदिष्वासम् । अयं च सम्परायारम्भप्रणवायमानस्वानो देवदत्ताभिधानः शङ्खशेखरः । तदुपादीयतामसौ ।

अर्जुनः—( सहर्षं प्रणामपूर्वं धनुरादाय )

जयत्यजगवं धनुर्जयति धूर्जटेर्धन्विता
धनुर्धरधुरन्धरो जयति शार्ङ्गधन्वा हरिः ।
धनुश्च ऋजुरोहितं जयति सा च धानुष्कता
सुरारिसमराजिरप्रणयिनस्त्रिलोकीपतेः ॥ ३६ ॥

पुरुषः—( रथादुत्तरन् ) स्वस्ति भवते भीमानुजाय । इत्यन्तर्धत्ते

उत्तरः—( सचमत्कारमात्मगतम् ) अये ! स एवायमिन्द्रसूनुरर्जुनो यस्य किल सुभद्राहरणोन्मुद्रितानि कीर्त्तिगीतानि कुरङ्गकुरङ्गलोचनानां रोमाञ्चकञ्चुकमामुञ्चन्ति । ( सानन्दमञ्जलिं बद्ध्वा प्रकाशम् ) कुमार धनञ्जय ! भूमिञ्जयोऽभिवादयते । ( इति पादयोः पतति )

अर्जुनः—( स्वगतम् ) कथं ! विज्ञातोऽस्मि विराटराजपुत्रेण ! । अथवा प्रस्तावस्तावदिदानीमात्मेन आविष्कर्तुम् । ( इति उत्तरमुत्थाप्य परिष्वजते )

उत्तरः—( ससम्भ्रमम् ) अपि कुशली सपरिग्रहोऽपि महाराजः सुकृतात्मजः कमिदानीं देशमुपस्करोति सहानुजन्मभिः ।

अर्जुनः—( विहस्य )

युधिष्ठिरं विद्धि तमक्षदेविनं यमाविमौ वाजिषु गोषु यौ स्थितौ ।
वृकोदरः सूदवरः स यः प्रियापराभवेणाकृत कीचकव्ययम् ॥ ३७ ॥

---

१ B 'मात्मानमाविष्कर्तुं ।

उत्तरः—मर्षणीयमज्ञातभाषितम्। ( इति पुनः पादयोः पतति )

अर्जुनः—( सादरं निवारयन् ) न कदाचिदज्ञाते क्षतिरस्ति। तदेहि दिव्यं रथमारोहावः। ( इति रथारोहणं नाटयतः )

उत्तरः—कः कोऽत्र भोः ?।

( प्रविश्य )

पुरुषः—आदिशतु कुमारः।

उत्तरः—जयसेन ! निवर्तय मदीयं स्यन्दनम्। ( इति रथमर्पयति )

( जयसेनो रथमादाय साश्चर्यमर्जुनमालोक्य निष्क्रान्तः )

अर्जुनः—( बाहू विलोक्य सोत्साहम् ) किमधुना वलयपरिग्रहेण?। ( इति वान्युत्तारयति )

उत्तरः—( दृष्ट्वा सरोमाञ्चम् ) अहह !

धवलां वलयश्रेणीं त्वचमिव निर्मुञ्चदेतदाभाति।
ज्याकिणकठोरमर्जुनभुजयुग्मं भुजगयुग्ममिव ॥ ३८ ॥

( इति रथमारुह्य अर्जुनं प्रति )

कुमार! भारद्वाजाङ्गराजभीष्मप्रभृतिभिः पुरुषव्याघ्रैरतिभीषणा कुरुनरेश्वरसेनारण्यानी। तदप्रमत्तेन सञ्चरणीयमिह कुमारेण।

अर्जुनः—( स्मित्वा गाण्डीवगुणं परामृशन् ) वैराटेय! दृश्यतां यदत्र विधास्ये।

स्वस्ति स्वस्त्रिनीसुताय गुरवेऽप्येष प्रणामाञ्जलिः
स्थाता चेत्समरे नरेश्वरपशुः सार्कं स कर्णादिकैः।
तद्विक्रान्तपथातिथेरपचितिं कर्त्तास्मि तस्योत्तरां
नाराचैरचिरात्किरातहतनानिर्वापणव्यापृतैः ॥ ३९ ॥

तदशङ्कितेन प्रेर्यन्तां तुरङ्गमाः ( इति शङ्खमुद्धमति )

उत्तरः—( वाहान्प्रेरयन्नग्रतो विलोक्य ) कुमार ! तवामुना बधिरीकृतत्रिभुवनेन शङ्खध्वनिना क्षुभित इवायं बलजलधिरवलोक्यते। इमावथ कुरुराजस्य जयमनोरथधौरेयौ भीष्मद्रोणौ सैन्यपृष्ठावस्थितौ मुहुर्मुहुरावां विलोकयन्तौ पुरतो वर्तेते।

( ततः प्रविशति भीष्मो द्रोणश्च )

द्रोणः—( विलोक्य सविस्मयम् ) शान्तनव !

धर्षयन्नखिलं विश्वं ससाश्व इव तेजसा।
पुरुषः कोऽयमायाति वपुष्मानिव विक्रमः ॥ ४० ॥

भीष्मः—( दूरादवलोक्य सवितर्कम् ) आचार्य ! निश्चितमेतेन संरम्भवता समरमुखाभिक्रमणेन वत्समर्जुनमेवागच्छामि। यतः—

कः सिंहेन विनानुगच्छति जवान्मत्तं गजानां व्रजं
को वा मारुतिमन्तरेण तमपाम्लंघयितुमीष्टे पतिम्।
कश्चान्यस्त्रिदशाधिनाथतनयादेकः समाकाङ्क्षणे
वीराणां गणमुद्धतप्रहरणं संहर्तुमुत्कण्ठते ॥ ४१ ॥

अर्जुनः—वन्दनीयावेतौ।प्रदक्षिणीकुर्वाणः सदाहङ्कुर्वाणेन सूतसुतेनानीयमानं सुयोधनानीकमनुप्राप्य रथं यावदनयोश्चिरदृष्टयोः शिष्टाचारसमयोचितं तीक्ष्णशरप्रणामेन दर्शयामि। ( इति भीष्मद्रोणयोः पादावुद्दिश्य शरद्वयं मुञ्चति )

उत्तरः—यदादिशति कुमारः।

( इति तौ प्रदक्षिणीकुर्वन्नर्जुनेन सह निष्क्रान्तः )

द्रोणः—( पादयोः पुरः शरमवलोक्य सगद्गदस्वरम् ) अयि देवनदीनन्दन ! दृश्यतामियमुचितज्ञता कुन्तीतनयस्य। यदीदृशोऽपि समरसंरम्भे न गुरुजनेषु विनयातिपातः। तद्विजयतां मे प्रियशिष्यः।

भीष्मः—( सखेदम् ) आचार्यविचार्यतामिदमस्मदीयमपि गुरुत्वानुरूपाचरितम्। यदेते वयं द्रविणकणादानलोभेन भुजिष्यायमाणाः सुहृत्सहृदावज्ञसनविनिर्गतस्य धर्मार्गलास्खलितशौर्यसिन्धुरप्रसरस्य वत्सबीभत्सोः पुरः शरासनमेव पारितोषिकीकृत्य वर्त्तामहे। सर्वथा धिगेतद्धनाय निबन्धनम्।

तथाहि—

सोढं सत्यकथाव्रतैः कुरुपतेः सावज्ञमालोकितं
कर्णस्याप्यभिशङ्कितैरनुमतं दुर्मन्त्रमन्त्रं वचः।

---

१ B adds before this

द्रोणः—नदीज ! लङ्कापुरवासिकेतुर्नगाह्वयो नाम नगारिसूनुः।
एषोऽङ्गनार्थमधरस्तरस्वी निर्निष्पते सर्वंहरूमनीरात् ॥

This verse occurs with difference of reading in the second half in the thirtyninth Adhyâya of the Viràta Parva २ B मित्र

दृष्टास्माभिरधोमुखैश्च विधुरा सा पाण्डवानां वधू-
धृष्टत्वेऽपि धनाशया वयममी तत्किं न यत्कारिताः ॥ ४२ ॥

द्रोणः—परिणतमिदानीमानन्दितशकुनेर्भवदवज्ञानविषपादपस्य कुरु-कुलोपभोग्यं फलम् ।

( नेपथ्ये )

गन्धर्वेन्द्रमदैकदस्युभिरिपुव्रातैः प्रदीप्तां दिवं
यस्यासिञ्चदमन्दचन्दनतरुस्यन्दावदातं यशः ।
पार्थोऽहं कुरवः स वः स प्रवसनो ज्यारावराजाज्ञया
व्यासेधामि मृधार्थिनस्तदिह मे दत्त्वोत्तरं गम्यताम् ॥ ४३ ॥

भीष्मः—( श्रुत्वा ) भृशमभियुक्ता कुरुवरूथिनी धनञ्जयेन दूरं गमिष्यति ।

( पुनस्तत्रैव )

भो ! भो ! कर्णप्रभृतयो दुर्योधनगृह्या महारथाः ! प्रतिक्रियतां प्रतिनियुतामर्मा ।

विघटितघनधार्त्तराष्ट्रचक्रं समरसरस्सरसात्मपुण्डरीकम् ।
द्विरदवदवगाहते समन्तादतुमदत्रिदशाधिराजसूनुः ॥ ४४ ॥

( प्रविश्य सम्भ्रान्त पुरुषः )

पुरुषः—तात ! त्रायस्व त्रायस्व । ( इति द्रोणस्याग्रे निपतति )

द्रोणः—( दृष्ट्वा ) वत्स ! कथं सारथिरसौ सुषेणः ! । ( ससम्भ्रमम् ) सुषेण ! कथय कथय कुशली वत्सो मे अश्वत्थामा ।

सुषेणः—तात ! शरीरमात्रेण ।

द्रोणः—( सखेदम् ) कथमिव ? ।

सुषेणः—( कथञ्चिदुत्थाय ) प्रचलति कौरवानीके लोकोत्तरपराक्रमेणैव सूचितमर्जुनोऽहमिति महारथानामात्मानमाविष्कुर्वन्मर्त्यसुरभिरक्षानियुक्ताभ्यामश्वत्थामशारद्वताभ्यामभ्येत्य सितवाहनः प्रतिहन्तुमारब्धः ।

---

१ B माया

२

भीष्मः—तदिदं कल्पान्तविप्लुतस्य पयोधेर्महीधराभ्यां प्रतिस्खलनम्। ततस्ततः।

सुषेणः—तदेतौ मातुलजामेयौ द्वावप्यजेयाश्वत्थामानौ विनयावच्छन्नमानोपपन्नमिदमिन्द्रसूनुनाऽभिभाषितौ।

पूज्यौ युवां द्विजपती व्रजतां तदाजे-
र्विद्यामदोऽथ बलवानिह वां नियुङ्क्ते।
तन्मर्षणीयमिदमद्य मृधोद्यतारि-
दोर्दर्पसम्पदपहारि शरापराद्धम्॥ ४५॥

द्रोणः—ततस्ततः।

सुषेणः—अथ तद्वचनावज्ञातरि तरसैव प्रहरमाणेऽश्वत्थामनि तथार्जुनेन विक्रान्तं यथा—

निरस्ते हस्ताग्राद्धनुषि मुषितायामिषुशतैः
पताकायां कायान्वहति विधुरे धुर्यनिवहे।
रथेऽवस्थाप्य स्वे तमथ मथितोरःस्थलरुजा
विसञ्ज्ञं वात्सल्यादहरत कृपस्त्वत्कृपितृकम्॥ ४६॥

द्रोणः—शान्तनव! पर्याकुलं मे मनः। तद्वत्समेवानुसरिष्यामि। त्वयापि शेषं विज्ञप्य द्रुतमागन्तव्यम्।

(इति निष्क्रान्तः)

भीष्मः—सुषेण! ततस्ततः।

सुषेणः—देव! देवराजनन्दनदर्शनादेव शकुनिदुःशासनविकर्णप्रभृतिषु पलायमानेषु निवर्त्तितासु मत्स्यराजसौरभेयीषु भयङ्कराकारतया महाभैरवमपि भर्त्सयन्कृतान्तमप्यातङ्कयन्मृत्युमप्यतिलङ्घयन् अरेरे! तिष्ठ! तिष्ठ! इत्यादिसंरम्भाडम्बरैर्वचनैरम्बरमपि परिमिमानोऽर्जुनो भानोस्तनुजन्मानमभिजगाम। इति सति निष्क्रम्य समागतोऽस्मि।

(नेपथ्ये कलकलः)

सुषेणः—(श्रुत्वा सत्रासम्) देव! यथायमुद्धतो देवदत्तध्वनिस्तथा मन्ये पराजितश्चम्पाधिराजः।

भीष्मः—कः सन्देहः । तथापि शृणु निश्चयमुपलभामहे ।

(पुनस्तथैव)

रे मोहनिद्राकुम्भकर्ण कर्ण !

यत्त्वं देवादहिममहसः स्वस्य जन्माभिधत्से
घत्से मानं यदपि नृपतेरस्य तुल्यः सखेति ।
यत्संदर्पं वहसि च मया चापविद्याभिमानी
तत्सर्वं ते क नु बत गतं नश्यतः सम्परायात् ॥ ४७ ॥

भीष्मः—(श्रुत्वा) सत्यं पलायित एव सूतपुत्रस्तत्साम्प्रतमेकाकिनः कुरुपतेः सविधवर्त्तिनो भविष्यामः। (इति निष्क्रान्तः)

सुषेणः—बाढं परिश्रान्तोऽस्मि । तद्विश्रम्य गमिष्यामि। (इत्युपविशति) (पुनः सचमत्कारं स्मृत्वा) अहह ! सकलानीके जलाभिव्यापिनस्तैलबिन्दोरिव वन्दनीया काऽपि शक्तिः सुरेन्द्रनन्दनस्य।

तथाहि—

धृतराष्ट्रसुतैर्दृष्टः किरीटी विश्वतोमुखः ।
एकोऽप्यनेकधा चलन्नात्मा नैयायिकैरिव ॥ ४८ ॥

हन्त! श्लाघनीयस्तपस्तनयो यस्यैवंविधा मधुवैरिवाहव इव भ्रातरश्चत्वारः समिति पराक्रमन्ते ।

(ततः प्रविशति रथारूढो युधिष्ठिरो द्रौपदी च)

द्रौपदी—तदो तदो ।

युधिष्ठिरः—[3]प्रिये ! ततस्त्रिगर्त्ताधिपतौ सुशर्मणि शराभिघातविघटितमर्माणं विराटमादाय जितकाशिनि प्रतिनिवृत्ते मया भीमसेनः सानुक्रोशमित्यभिदधे। अयि वत्स ! सुदुस्सहोऽस्माभिरयमभिनवः कौलीनः कलङ्को यद्वृकोदरपरिरक्षितस्यापि विराटस्य पराजयः ।

द्रौपदी—सोहणं मंतिदं अज्जउत्तेण । तदो तदो ।

युधिष्ठिरः—अथ मद्वचनालाननिर्मुक्तेन वीरकुञ्जरेण गम्भीरं गर्जता,

१ B श्रुत्वा २ तनस्तनः। ३ B reads अथ दक्षिणगोग्रहवार्त्तां च कथयतं। अथ प्रिये ४ शोभनं मन्त्रितमार्यपुत्रेण।

गदावदालम्ब्य तमालमेक-
मनेकपानामयुतं निहत्य ।
तस्मात्त्रिगर्तेश्वरसैन्यजाला-
दुन्मोचितस्तेन स मत्स्यराजः ॥ ४९ ॥

द्रौपदी—साहु वीरावयंस भीमसेण ! साहु ।

सुषेणः—मन्दीभूतः समरसम्मर्दश्रमस्तद्गच्छामि । ( इति निष्क्रान्तः )

युधिष्ठिरः—देवि ! निवेदितं भीमस्य भुजविस्फूर्जितम् । तदेहि धनञ्जयस्यापि दर्शयामि । ( इति उभौ रथेन परिक्रामतः )

( नेपथ्ये ) वत्स वृकोदरानुज !

प्रत्याहृताः सुरभयो भुजसौरभं च
विक्रामताऽद्य भवता भुवने विकीर्णम् ।
तद्दुष्करां कुरुपतिप्रतिघातवाञ्छा-
मुत्सृज्य वत्स ! कुशली व्रज सम्परायात् ॥ ५० ॥

युधिष्ठिरः—( श्रुत्वा ) प्रिये ! शान्तनवस्यैव वात्सल्यावष्टम्भभावितं मधुरकषायपरिणाममिदं वचनम् ।

द्रौपदीः—अज्जउत्त ! कुमारधणंजयस्स पडिवयणाकण्णसड्डालुयं खु मह कण्णजुयलं ।

( पुनर्नेपथ्ये )

तात ! किमिदमनात्मसदृशमादिशन्ति तत्रभवन्तः ।

यतः—

वीरैरेभिः परिवृतरथः फाल्गुनेनामुनाद्य
प्रारब्धोऽसौ कुरुनरपतिः सम्प्रहारे प्रहर्तुम् ।
दूरादेनं सह सहचरैर्यद्यजित्वा निवर्ते
तद्वंशस्य प्रथमपुरुषो लज्जितस्त्वं मयैव ॥ ५१ ॥

---

१ साधु वीरावतंस भीमसेन ! साधु । २ B भुवनेऽवकीर्णं ३ आर्यपुत्र ! कुमारधनञ्जयस्य प्रतिवचनाकर्णनश्रद्धालुकं खलु मम कर्णयुगलम् ।

युधिष्ठिरः—साधु निरुत्तरीकृतोऽयं वत्सेन भगवान्सौरसैन्धवः। (पुनरवलोक्य) कथमेष मेषस्थितादित्यबहुसहस्रतेजसा वत्सेन युयुत्समानः शान्तनवमन्तर्धाय सुयोधन इत एवाभिवर्तते ! ।

(ततः प्रविशतः संरम्भं नाटयन्तौ रथाधिरूढौ धृतधन्वानावर्जुनसुयोधनौ)

दुर्योधनः—आः पाप पाण्डवडिम्भ ! मयि दुर्योधने धनुर्धारिणि तातपादानधिक्षिपसि । पश्य रे !

> गुरुरिति तव क्षोदे मन्दादरस्तदराति नां
> भुवनमिव महासत्त्वेऽपि त्वं दधासि धिगुद्धतः ।
> मयि दिश दृशं यस्त्वां चापग्रहग्रथिलं किल
> स्मरमिव हरो भस्मीकर्तुं प्रसह्य समुत्सहे ॥ ६२ ॥

द्रौपदी—(अपवार्य सरोषम्) हयास कुरुपंसुल ! णिंदणीयंपि अत्ताणयमेवं वण्णेसि ।

अर्जुनः—(सक्रोधम्) रे हतक सांयुगीनम्मन्य धार्तराष्ट्राधम ! प्रासङ्गिकमपरं ननु त्वामेव दिदृक्षते पार्थनेपथ्यधारी दारुणोऽयं दैवदुर्विपाकः ।

अपरं च—

> अस्मासु काननविवासिषु लज्जयैव न्यञ्चन्नुच्चैरिपुधिगर्भगृहे स्थितं यैः ।
> तेऽमी शराश्चिरसमुत्क्षिपरा भवान्नेर्दाहज्वरं त्वदसृजा विसृजन्तु सद्यः॥६३॥

दुर्योधनः—रे वाक्शूर ! पश्य इदानीं दुर्योधनस्य प्रहरणप्रावीण्यम् ।

(इति बाणं धनुषि सन्धत्ते)

द्रौपदी—(दृष्ट्वा साशङ्कम्) अज्जउत्त ! पिच्छ ! पिच्छ ! जचकंचणरसरंजियं भुवणाभोयं कुणंतो वियडतडिकडप्पदुप्पिच्छदंसणो एसं हुयासणो पसरंतमनुज्ञेव कुदोवि संघट्टिदेहि घणसहस्सेहि उवसमीयदि ।

युधिष्ठिरः—(सम्यङ्निरूप्य) देवि ! तदेव दुर्योधनस्य प्रहितमाग्नेयास्त्रं वत्सो वासविर्वारुणास्त्रेण प्रतिरुणद्धि ।

---

१ B गुरुरपि २ B ग्रहितं ३ हताश कुलपांसुल ! निन्दनीयमप्यात्मानमेवं वर्णयसि । ४ B अत्ताणमेवं मत्रेसि ५ आर्यपुत्र ! पश्य! पश्य! जात्यकाञ्चनरसरञ्जितं भुवनाभोगं कुर्वन् विकटतडित्कलापदुष्प्रेक्ष्यदर्शन एष हुताशनः प्रसरन्नमन्त्रेव कुतोऽपि सङ्घट्टितैः घनसहस्रैरुपशाम्यते । ६ B तेनैव प्रहितं

दुर्योधनः—रे पाण्डवडिम्भफेरण्ड ! कौरवकेसरिणं दुर्योधनमेवमाक्रमितुमिच्छसि । तत्सहस्वेदानीम् ( इति पुनर्बाणं सन्धत्ते )

अर्जुनः—( सरोषप्रकर्षम् ) अरे कद्वद ! नियन्त्रितोऽस्मि गुरुवचसा । व्याहर स्वैरं तत् ।

तथाहि—

पतगपतिरिव त्वां जिह्मगं च द्विजिह्वं
सपदि समहरिष्यद् द्रोणशिष्यः स एषः ।
यदि न सदसि कान्ताकेशहस्ते निरस्ते
बकरिपुरकरिष्यत्त्वद्विधातप्रतिज्ञाम् ॥ ५४ ॥

( इति शरं मुञ्चति )

( दुर्योधनः प्रहारवेदनां नाटयन्पतति )

सूतः—( सत्रासं दिशो विलोकयन्नुच्चैःस्वरम् )
द्रोणभीष्मकृपकर्णसौबलाः किं बलेन भवतां प्रधावत ।
पार्थबाणफणिदंशमूर्च्छितो नन्वसौ पतति कौरवेश्वरः ॥ ५५ ॥

( पुनर्वीक्ष्य ) कथं मम वचनमनादृत्यैव पलायन्ते ।

अर्जुनः—( दुर्योधनस्य रथमारुह्यावलोक्य च ) कथमद्यापि नास्य चेतना स्वभावाचेतनस्य ! ।

युधिष्ठिरः—( सहसोपसृत्य ससम्भ्रमम् ) कृतमिदानीं मोहमुपगतेऽस्त्रव्यापारेण । ननु निवेदितासि क्षत्रधर्माणाम् । ( इत्यर्जुनं हस्ते गृह्णाति )

अर्जुनः—( विलोक्य स्वगतम् ) कथमयमार्यो महाराजः सुकृतात्मजः ! । ( प्रकाशम् ) देव ! न कदाचिदस्मदीयानामहितमांसघस्मराणामपि हेतीनां कीचकान्तकाय सङ्कल्पितमेतमास्वादयितुमभिलाषः । तथापि मिथ्याभिमानिनो माहात्म्यचिह्नं शिरःकिरीटमपनेष्यामि ।

युधिष्ठिरः—भवत्वेवम् । ( इति हस्तं मुञ्चति )

द्रौपदी—( सहर्षमर्जुनं प्रति ) कुमार ! जुत्तमिणं ।

---

१ B रे कद्वचन ! २ कुमार ( युक्तमिदम् ) । यत.—

जदो—

अणमियसिराणमकिवणवयणाणमसुक्कसमरमग्गाणं ।
वीराणमाणभंगो सुदूसहो पाणभंगाओ ॥ ५६ ॥

अर्जुनः—( दुर्योधनस्य किरीटमपनीय काण्डमुखेन ध्वजदण्डे श्लोकमुत्कीर्य च युधिष्ठिरं प्रति ) देव ! अवधारय

छलद्यूते जेतुर्जतुमयमगारं रचयितु-
र्गरं दातुः कान्ताकचसिचयहर्तुश्च सदसि ।
स्वयं गन्धर्वेन्द्रादधिगमितजीवस्य भवतः
शिरःस्थाने मानिन्मुकुटमपनिन्ये विजयिना ॥ ५७ ॥

( इति वाचयति )

उत्तरः—( सश्लाघम् ) सूक्तमिदमपराधप्रबन्धानुविद्धं कुमारधनञ्जयेन ।

युधिष्ठिरः—वत्स ! कृतं कर्तव्यम् । तदवतीर्यतामितः । ( इत्यर्जुनं रथादवतार्य सूतं प्रति ) अहो ! त्वरितमपसारय कुरुपतिस्यन्दनम् ।

( सूतः सभयं पश्चादवलोकयन्दुर्योधनेन सह निष्क्रान्तः )

उत्तरः—( युधिष्ठिरं प्रणम्य सहर्षोत्सुक्यम् ) देव ! समादिश मां यथा मत्स्यराजस्य सान्तःपुरपौरपरिवारस्यापि पार्थपराक्रममेवोद्घोषयामि ।

यथा—शून्ये राष्ट्रे प्रविष्टोऽयमाहर्तुं सुरभीरिमाः ।
कर्णं निष्कृत्य पार्थेन मुक्तः कौरवकुक्कुरः ॥ ५८ ॥

युधिष्ठिरः—यदभिमतं भवते । ( इति रथमर्पयति )

( उत्तरः द्वितीयरथप्रमहान् अर्जुनस्यार्पयन्सर्वान्प्रणम्य निष्क्रान्तः )

अर्जुनः—( तथा कृत्वा ) देव अजातशत्रो ! याज्ञसेनीद्वितीयेन भवता समलङ्क्रियतामेष स्यन्दनवरः ( इत्युभौ नाट्येन तथा कुरुतः )

( आकाशे शङ्खध्वनिः पुष्पवृष्टिश्च । सर्वे ससम्भ्रममवलोकयन्ति )

(निरूप्य साश्चर्यम्) आर्य ! पश्य ! पश्य ! गगनगर्भादयं भगवान्वृन्दारकचक्रवर्ती दिव्यविमानारूढः प्ररूढरोमाङ्कुराभिर्विचित्राभिरप्सरोभिः परिवृत इतो वर्तते ।

( ततः प्रविशत्याकाशलम्बमानविमानाश्रितः सहाप्सरोभिः वासवः )

---

अनमितशिरसामकृपणवचनानामशुष्कसमरमार्गाणाम् ।
वीराणामाणभङ्गः सुदुःसहः प्राणभङ्गात् ॥

युधिष्ठिरः—( ऊर्ध्वमवलोकयन्नञ्जलिं बद्ध्वा ) भगवन् भुवनैकविभो गीर्वाणराज ! पाण्डोः प्रथममपत्यं युधिष्ठिरोऽभिवादये ।

( इति सर्वे प्रणमन्ति )

वासवः—वत्स विजयिन् ! महदाश्चर्यं दर्शितवानसि सम्प्रति सम्परायकुतूहलिनामस्माकम् ।

तथाहि—

दूरस्थे हसितं पुरोऽप्यचकितनाकारं स्थिते विस्मितं
विज्ञाते क्षुभितं धनुर्गुणटणत्कारोद्धते कम्पितम् ।
दृष्टस्याग्नि पलायितं व्यवहिते भूयः समुज्जीवितं
भग्नोपेक्षिणि च स्तुतं त्वयि परैर्वीताहवे व्रीडितम् ॥ ५९ ॥

तदनेन जगदानन्ददायिना वीरचरितेन परितुष्टोऽस्मि ते । वृणीष्व वाञ्छितम् ।

अर्जुनः—( सविनयम् ) देव सकलदेवताधिदैवत शतक्रतो ! किमसम्भाव्यं भवत्प्रसादस्य । परम्—

तीर्थानामवगाहनैः सफलिता निन्द्याऽप्यरण्यस्थितिः
( युधिष्ठिरं दर्शयन् )
निर्व्यूढं च मनस्विनोऽस्य नृपतेः सत्त्वावगूढं वचः ।
निर्मथ्य प्रतिसैन्यसागरमिमं गावः समासादिताः
किञ्च त्वं प्रणतश्चराचरगुरुः किं प्रार्थयेऽतः परम् ॥ ६० ॥

वासवः—वत्स सात्त्विकशिरोमणे युधिष्ठिर ! वीरोत्तंस सव्यसाचिन् ! तथापीदमस्तु ।

अन्नैरस्तु निरन्तरा वसुमती तत्सम्पदं वारिदाः
काले कन्दलयन्तु भेकनिकरप्राणप्रदैरम्बुभिः ।
तत्सन्ताननिदानमग्निषु वषट्कुर्वन्तु हव्यं द्विजाः
तद्रक्षासु विचक्षणाः क्षितिभुजो राज्यं भजन्तु स्थिरम् ॥ ६१ ॥

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽयं पार्थपराक्रमनामा व्यायोगः श्रीमह्लादननिर्मितश्च ।

---

# INDEX TO THE VERSES IN THE PÂRTHAPARÂKRAMA

## APPENDIX I.

# प्रह्लादनसूक्तयः[1]

### I

एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य।
विश्वं सशैलकाननमाननमालोकते यस्य* ॥
जलदः समुद्रसेवामाचरति समग्रभुवनभरणाय।
कुरुते तामपि हतमतिरात्मम्भरिरनिशमौर्वाग्निः* ॥
गाता कोकिल एव ज्ञाता च रसाल एव नियतमिदम्।
यः पञ्चममुद्गायति यस्यास्थिषु पुलकमुकुलानि* ॥
वहसि बलिभुजां कुलानि मौलौ यदि सहकार! तदत्र को निषेद्धा।
परमुदयति पल्लवाञ्चलेषु स्फुरदलिभिस्तव सौरभप्रसिद्धिः ॥
उत्तंसकौतुकरसेन विलासिनीनां लूनानि यस्य न नखैरपि पल्लवानि।
उद्यानमण्डनतरो सहकार! स त्वमङ्गारकारकरगोचरतां गतोऽसि ॥
यो दष्टः स्फुरदस्थिसम्पुटमिपान्निर्यत्प्रवालाङ्कुरो
दैवात्स छिदलादिकक्रमवशादारूढशाखाशतः।
स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छदं पुष्पितः
सोत्कर्षं फलितो भृशं विनमितः कोऽप्येष चूतद्रुमः ॥
मूर्त्तिर्नेत्ररसायनं यदि कुतश्छायेयमच्छेतरा
चक्रे सापि ततः कुतः फलभरः पीयूषगङ्गागृहम्।
एवं सर्वगुणान्वितं यदि भवानाम्रद्रुमं निर्ममे
तत्तत्र प्रगुणीकृतः कथमसौ दुर्दैवदावानलः ॥
महेशस्त्वां धत्ते शिरसि रसराजस्य जनिता
विशुद्धिस्त्वत्सङ्गात्कनकमयमेति त्रिभुवनम्।
तनोति त्वत्सेवां ननु कनकवृक्ष! त्वदपरः
परस्तत्को न स्याद्यदि न सुलभीभावमभजः* ॥

प्रह्लादस्य

---

1 Here are quoted verses attributed to प्रह्लाद & प्रह्लादन in Jahlaṇa's Sūktimuktāvali.

*Found also in शार्ङ्गधरपद्धति under प्रह्लादन

## II

रविरविकलं श्लाघापात्रं किमत्र विचार्यते
  सकलजगतः सत्तामुज्जीवयन्ति यदंशवः ।
किमु पुनरितस्तापः पापः स केन विलुप्यतां
  अयमपि सुधारश्मिस्तस्मिन्न संरभते यदि ॥
स क्षारो जलधिः सरांसि विलसन्त्यभ्यागतेभ्यो मितं
  गृध्यन्ते सरितः श्रमेण परितोऽप्यापाय बन्धं बलात् ।
माप्यं कूपकनः कथञ्चन किमभ्यारोप्य कण्ठे पदं
  तत्त्वां त्यागिनमेकमेव भगवन्पर्जन्य ! मन्यामहे ॥
पारे पयःशाना: सन्ति महान्तो भव्यभूरुहाः ।
पारिजात ! त्वयैकेन नन्दनं नन्दनं पुनः ॥
रोहणाचल ! शैलेषु कस्तुलां तुलयेत्तव ।
यस्य पाषाणखण्डानि मण्डनं मेदिनीभृताम्* ॥
आलोकयन्तः सन्त्येव भूयांसो भास्करादयः ।
कलावानेव तु ग्रावद्रावकर्मणि कर्मठः* ॥
जडात्माऽपि भवत्युच्चैराश्रयन्महतां पदम् ।
गङ्गौघः शम्भुमूर्धानं प्राप विष्णुपदाश्रयात् ॥
शाखाभिर्वरिता दिशः कलयिता श्रीमंविभागोत्सवं
  तां रोलम्बकुटुम्बके प्रथयिता पान्थातिथेयीमसौ ।
इत्थं नाथमनोरथप्रथिमभिः सार्धं प्रवृद्धे मुधा
  हा दुर्दैव ! किमाततान तदिदं बाले रसाले भवान् ! ॥
मित्रः प्रजानां दातैव न पुनर्द्रविणेश्वरः ।
  आगच्छन्वाञ्छ्यते लोकैर्वारिदो न तु वारिधिः ॥

प्रह्लादनस्य

---

*Quoted in शार्ङ्गधरपद्धति under प्रह्लाद

# APPENDIX II.

## KAYADRAN INSCRIPTION

१– ॥ स्वस्ति श्रीसंवत् १२२०. जेष्ट सुदि
२–१५. सोमदिने सोमपर्व्वे महाराजाधि-
३–राज महामंडलेश्वरश्रीधारावर्षदेवे-
४–न सासनं प्रदतं श्रीकासेश्वरदेवीयभ-
५–द्दारकदेवेश्वरस्य फुलहलीसत्क
६–मोचनीयः श्रीकुम्वरपाह्लणदेवेन ॥ वाह-
७–ल० केल्हणेन प्रदत्तं ॥ तलारपेथडेन जू-
८–णीदापं मोचनीय ॥ सोमपर्व्वे ॥ साक्षि वा-
९–हडसुत वजयरा । देजआसुत देदा साक्षि अ-
१०–त्र साक्षि महाजन ॥ जोन्यदत्तं स्वदत्तं वा ह-
११–रे भूमा नराधिप । प्रनष्टामपि ग्वलेन ॥
१२–तस्य–ब्रह्मघातकं । मंगलं महाश्री ॥
१३–वासणग्रामवास्तव्य साल्हा खिसिग—
१४–प्रदत्तं नाप–क्षेत्रं मारिसह .... ....

## AJARI INSCRIPTION OF 1240

१ ॥ ओं ॥ सं १२४० वैशाख सुदि ३ सोमे अद्ये-
२–ह श्रीचन्द्रावत्यां ( त्यां ) श्रीधारावर्षदेवविजयराज्ये
३–श्रीपाल्हणदेवकुमार पटराणी श्रीसींगारदेवि
४–महं वांवडि आजाहरीग्रामवास्तव्य अइचाउश्री
५–अरहट रा. जगदेव महं० आसल तला० मो-
६–हण भांभीय माहिल सकल आभीर्व्यं कारि
७–का भुक्तीः ॥ दीपयात्राभाव्यं समेइ पुली
८–कावली . .... .... ....
९– .... .... गा ....
१०–रीघ जु कोइ पुजारइ वारइ–चाइत.
११– .... .... ...

From Kotishvar (Mt. Abu,) inscription of Samvt. 1265

संवत् १२६५ वर्षे वैशाष शु १५ भौमे चौलुक्योद्धरणपरमभट्टारक-महाराजाधिराजश्रीमद्भीमदेवप्रवर्धमानविजयराज्ये श्रीकरणे महामुद्रामात्य-महं० ठाभूप्रभृतिसमस्तपंचकुले परिपन्थयति चंद्रावतीनाथमांडलिकासुरशंभु-श्रीधारावर्षदेवे एकातपत्रवाहकत्वेन भुवं पालयति षट्दर्शनअवलंबनस्तम्भ-सकलकलाकोविदकुमारगुरुश्रीप्रह्लादनदेवे यौवराज्ये सति इत्येवं काले।

## APPENDIX III.

अर्बुदाचलाधिपतिना परमारपाल्हणेन रीरीप्रतिमा गालिता। तत्पित्तले-नाऽचलेनाऽचलेश्वरशण्ड: कारित:। तत्पातकेन गलितकुष्ठी जात:। गोत्रिभी राज्यं गृहीतम्। मरणभीत्या देशान्तरे निर्गतो भ्रमन् शीलधवलाचार्याणां मिलित:। जिनार्चागालनपातकं प्रोक्तम्। गुरुभि: प्रतिबोधो दत्त:। पश्चात्ता-पाद्गुरुपादे लगित्वा स्थित:। हे भगवन्! पातकक्षयोपायं कथय प्रसद्य सद्यो दीने मयि। गुरुभिरुक्तम्—राजन्! प्रासादप्रतिमादिपुण्यं कुरु कुरु। तदनु तेन स्वनाम्ना प्रल्हादनपुरं निवेशितम्। तत्र स्वकारितषोडशस्वर्णकपिशीर्षकरम्ये पाल्हणविहारे श्रीपार्श्वनाथस्य प्रतिमा कारिता श्रीचन्द्रप्रभादिप्रासादाश्च। त्रिसन्ध्यं पूजां करोति स्म। गवाक्षस्थ: साह्लादचेतसा श्रीपार्श्वनाथप्रतिमां निरन्तरं विलोकयति स्म। तत्पुण्यानुभावेन नष्ट: कुष्ठ:। यावज्जीवं जिनभ-क्तिं प्रतिपाल्य दिवं गत:। यथा जिनवन्दनेन वाञ्छितप्राप्ति:, तथा श्रीणां परि-पूर्णता। किं बहुना? साक्षात्कल्पद्रुम एव जिन:॥

उपदेशतरङ्गिणी pp. 198-199